स्रु० बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥

टी० प्रसक्तिरिति च तस्मात्सूत्रस्वारस्यविरोधः त्रिकारावर्त्तीत्यादिसूत्रद्वयवैयर्थ्यातिदूरलक्षणादोषः पूर्ववत्, अविभागपक्षे वा कथं जक्षत् क्रीडन् रममाणः सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्याद्यैश्वर्य्यमुपपद्यते किमीश्वरव्यापारा एव तदभिन्नस्य मुक्तस्य क्रीडात्वेनोच्यन्ते? उत व्यापारान्तराणि? प्रथमे बद्धस्यापि तदभिन्नत्वादीश्वरव्यापार एव क्रीडाः किञ्च स्युः, उपाधितो भिन्नत्वादिति चेत् तर्हि ईश्वरस्यापि ते व्यापारा लीला न स्युस्तस्यापि सवितृमण्डलाद्युपाधिभिर्भिन्नत्वात् भिन्नत्वेऽपि सर्वज्ञः स्वलीलात्वेन सर्वत्र प्रत्यभिसन्धत्त इति चेत्तर्हि बद्धव्यापारेष्वपि प्रत्यभिसन्धानात् दुःखित्वेन लीलात्वं तद्व्यापाराणां न स्यात् एवं मुक्तानामपीश्वराद्भिन्नत्वात् प्रत्यभिसन्धानाच्च दुःखित्वमिति तेषामविभागपक्ष एवाशक्तिः यदीश्वरव्यापाराद् व्यापारान्तराणि मुक्तानां लीला तर्हि व्यापारान्तरत्वमाश्रयभेदात्स्यात् अन्यथेश्वरव्यापारानतिरेकेण प्रागुक्तदोषप्रसङ्गात् आश्रयभेदेन व्यापारान्तरत्वे मुक्तेश्वरविभागपक्ष एवाङ्गीकृतः स्यात्। अन्ये तु वर्णयन्ति प्रकरणादिति य आत्मेत्यादिमुक्तप्रकरणस्य भोगगोचरत्वाच्च जगद्व्यापार इति असन्निहितत्वात् सृष्टिप्रकरणेष्वसन्निहितत्वात् परमाकाशस्थस्य मुक्तस्य विकारस्थानेष्वसन्निहितत्वादिति प्रत्यक्षोपदेशादिति आप्नोति स्वाराज्यमित्युपदेशाच्च निरवग्रहं मुक्तस्यैश्वर्य्यमिति चेत् आधिकारिकपदावच्छेदकदेशविशेषेषु हिरण्यगर्भसायुज्यं गतस्य तदधीनभोगोक्तेः न तु परमाकाशस्थस्येति, विकारावर्त्तीति, परमे व्योमन्सोऽश्नुत इति मुक्तैश्वर्य्यस्य परमकाशस्थस्य विकारस्थानावर्त्तितया परमात्मन एव जगदनुप्रवेशादि-

स्रु० वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति। सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजाचार्य्यविरचिते शारीरकमीमां-

साभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ समाप्तश्चा-ध्यायश्चतुर्थो, ग्रन्थश्चापि, शास्त्रं च परिसमाप्तम् ।

नमो भगवते रामानुजमुनये योगिवर्याय । नमः पूर्वाचार्येभ्यः । नमो भगवते बोधायनाय वेदान्तविशदीकरणदीक्षाय ॥ श्रीः श्रीः श्रीः श्रीरस्तु श्रीरस्तु श्रीरस्तु ॥

दिरिति दर्शयतश्चैवमिति यत्पुराणमाकाशं तत्र मे स्थानं कुर्वतः पुनर्भवायेत्यादि श्रुतिः स्मृतिश्च परमाकाशस्थितिं दर्शयत इति सोऽश्नुत इति भोगमात्रसाम्यलिङ्गाच्च न जगद्व्यापारः, इमं मानवमावर्त्तं नावर्तन्ते तेषु ब्रह्मलोकेषु परावतो वसन्ति तेषामिह न पुनरावृत्तिरिति इमं-शब्दे ह-शब्दविशेषितत्वाद् ब्रह्मलोकगतानामन्यस्मिन्मानव आवर्ते पुनरावृत्तिशङ्कां व्युदस्यति "अनावृत्तिः शब्दा"दिति, इमं-शब्देह-शब्दौ सन्निहितत्वमात्रावलम्बनौ न तु व्यक्तिविशेषपरौ श्रुतेरनित्यार्थत्वप्रसङ्गात्, अतो नावर्तान्तरे पुनरावृत्तिः मानव आवर्ते जन्माभावोऽनावृत्ति-शब्देनोच्यते गमनमात्रं न प्रतिषिध्यते अतस्सर्वेषु कामचारो भवतीत्यदोषः, ब्रह्मलोकगतानां मानवावर्तगमनं स्वदेशात् परदेशगमनवदुपपन्नं, तस्मान्न ब्रह्मलोकगतानामिह पुनर्जन्मेत्यनावृत्तिरुपपन्ना । तदेवं मुक्तैश्वर्य्यं निरवग्रहमिति तत्र ब्रूमः मुक्तप्रकरणे भोगप्रतिपादनस्य हेतुतयोक्तिर्विफला तावता जगद्व्यापाराप्रतिषेधात् विकारस्थानेष्वसन्निधानादिति चायुक्तम् अन्तिमसूत्रे मुक्तस्य स्वदेशात्परदेशगमनवत्सर्वलोकसञ्चरणस्याभ्युपगमादिमाँल्लोकानिति श्रुतत्वाच्च, आदित्रत्रस्य हिरण्यगर्भस्योभयभावनान्वितस्य मुक्तप्राप्यत्वायोगान्मुक्तस्य तत्पारतन्त्र्या योगाच्च द्वितीयसूत्रार्थोऽनुपपन्नः । विकारस्थाने सञ्चरणाभ्युपगमादेवानन्तरसूत्रद्वयार्थोऽनुपपन्नः; तथा हि स्थितिमाहेत्यस्य प्रत्यक्षानुमाने इति प्रत्यक्ष-शब्देन पुनरुक्तिश्च । श्रुत्यन्तरविषयः प्रत्यक्ष-शब्द इति चेच्च एकार्थविषयानेकश्रुत्युपादानस्य सूत्रभेदसापेक्षत्वाभावात् तद्भावे च सूत्रान्तराणामपि करणप्रसङ्गाच्च यदि तत्सूत्रद्वयं मुक्तैश्वर्य्यस्य परमाकाशस्थितिमात्रपरं तन्निरवग्रहैश्वर्यविरुद्धं, यदि तत्रैवावस्थानपरं तदा विका-

रस्यानसञ्चरणात्तदभ्युपगमविरोधः । अन्तिमसूत्रस्य चेहादिशब्दानां सन्निहितार्थमात्रपरतयाऽन्यस्मिन्नावर्त्ते पुनरावृत्तिशङ्काव्युदासपरत्वं चानुपपन्नं वैदिकशब्दानामनित्यव्यक्तिविशेषवाचित्वशङ्कायाः समाननामरूपत्वादित्यत्रैव निरस्तत्वेनात्र तच्छङ्काया एवानुत्थानात् । अत ईश्वरपाराधीन्यप्रयुक्तशङ्कैवात्र परिहर्त्तव्या, सा च सुपरिहृता, अतो यथाभाष्यमेवाधिकरणवर्णनं युक्तम् । इति सर्वं समञ्जसमिति, सर्व-शब्देन भेदश्रुत्यभेदश्रुतिघटकश्रुतिगुणादिविधिनिषेधश्रुतिभगवत्कृपा-स्वातन्त्र्यादिपरवाक्यप्रत्यवादीन्यभिप्रेत्य तेषां सामञ्जस्यमुक्तम्, इति-शब्दोऽखिलभुवनेत्यादिभाष्योक्ताशेषार्थपरामर्शी । सर्व-शब्देनानुदाहृतश्रुतिस्मृतीतिहासपुराणवचांसि तदनुग्राहकतर्कजातं च विवक्षितं, तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम् । उक्तार्थबाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः तेषां सर्वेषां परिहारोऽत्राऽस्त्येव, एतदनन्तर्भूतार्थो नास्ति, तस्मादुक्तप्रकारेण बाधकप्रमाणतर्कपरिहारश्चानुसंधेयः इत्यभिप्रायेण इति सर्वं समञ्जसमित्युक्तम् ॥ जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥ समुदिताधिकरणसंख्या । १५६ । समुदितसूत्रसंख्या । ५४५ ।

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदराजाचार्य्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां चतुर्थाध्यायस्य चतुर्थः पादः । अध्यायः समाप्तः । ग्रन्थः समाप्तः । ४ । शास्त्रं च समाप्तम् ।

नमो भगवते बोधायनाय वेदान्तविशदीकरणदीक्षाय ॥

नमः पूर्वाचार्येभ्यः ।

गुरवे वरदार्याय कुर्वीमहि नमस्क्रियाम् ।
यत्पदाम्भोजसेवा नः सूते वेदान्तसंपदम् ॥
श्रीमते व्यासविदुषे यतीन्द्राङ्घ्रिरजोजुषे ।
नमः कारुण्यवपुषे मायावादतमोमुषे ॥
व्यासार्यचरणाम्भोजयुगलं शरणं भजे ।
यद्गिरां परिणामस्य फलं नो भाष्यवेदनम् ॥